# ॥ मुचुकुन्दस्तुतिः ॥

मुचकुन्द उवाच -
कृष्णाय वासुदेवाय देवकिनन्दनाय च ।
नन्दगोपकुमाराय गोविन्दाय नमो नमः ॥ १॥

नमः पङ्कजनभाय नमः पङ्कजमालिने ।
नमः पङ्कजनेत्राय नमस्ते पङ्कजाङ्घ्रये ॥ २॥

नमः कृष्णाय शुद्धाय ब्रह्मणे परमात्मने ।
प्रणतक्लेशनाशाय गोविन्दाय नमो नमः ॥ ३॥

नमोऽस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे ।
सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः ॥ ४॥

हरे मत्समः पातकी नास्ति भूमौ तथा त्वत्समो नास्ति पापापहारी ।
इति त्वं च मत्वा जगन्नाथ देव यथेच्छा भवेत्ते तथा मां कुरु त्वम् ॥ ५॥

इति गर्गसंहितायां द्वारकाखण्डे द्वितीयाध्यायान्तर्गता
मुचुकुन्दस्तुतिः समाप्ता ।